# सिद्धान्त-दर्पणः ।

श्रीमद्बलदेव-विद्याभूषण-प्रणीतः ।

श्रीहरिदास दास ।

# सिद्धान्त-दर्पणः ।

गौड़ीय-वैष्णवदर्शनाचार्य्य—
श्रीश्रीमद् वलदेव विद्याभूषण-विरचितः ।



श्रीहरिदास दासेन प्रकाशितः ।
श्रीधाम नवद्वीप 'हरिवोलकुटीरतः' ।

४९७ गौराब्दः



# सिद्धान्त-दर्पणः ।



* श्रीनित्यानन्दाय नमः *

## प्रथमा प्रभा ।

**पिता पराशरो यस्य शुकदेवस्य यः पिता ।**
**तं व्यासं वदरीवासं कृष्णद्वैपायनं भजे ॥ १**

---

टिप्पनी ।

श्यामोऽपि यः श्रुति-सरोरुह-वोधरक्तः
शान्तोऽपि यः स्यति तमस्ततिमन्तरस्थाम् ।
प्रत्यक् पदं दिशति यः परमं स्वगोभि
र्व्यासं तमद्भुत-रविं शरणं प्रपद्ये ॥

वेदं तद्भाव्यं परेशं च दुर्धियो नास्तिका न मन्यन्ते । केचिन्नास्तिकाभासाः समाश्रयन्त्यर्धवुवकुटीयं । तानेतान् दुर्मुखान् निराकर्तुं 'सिद्धान्तदर्पणं' नाम प्रकरणं निबध्नन् स्वप्राचा कृतां श्रीव्यासभक्तिं तन्मुखे मङ्गलत्वेन लिखति । पितेति । भजे प्रणत्यादिभि रनुकूलयामीत्यर्थः ॥ पराशर-पितृकत्वेनास्येश्वरत्वं व्यज्यते । 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुमिति' श्रीवैष्णवात् । शुकपितृत्वेन विशुद्ध-भक्ति-समुपदेशित्वञ्च, तस्य भवित भजतो वाञ्छित-सिद्धिकरीति च ॥ १

**नित्यं निवसतु हृदये चैतन्यात्मा मुरारि र्नः ।**
**निरवद्यो निर्वृतिमान् गजपति रनुकम्पया यस्य ॥ २**

स्वयं मङ्गलमाचरति निरवद्यमिति । अत्र कृष्णश्चैतन्यो मुरारिश्चेति त्रयोऽर्था वर्णिताः । आद्ये पक्षे मुरारिः कृष्णचैतन्यात्मा चिद्विग्रहः । गजपति ग्राहक्लिष्टो गजेन्द्रः । निरवद्यो विगतपशुभावः । निर्वृतिमान् प्राप्तपार्षद-तनुः, द्वितीये चैतन्यात्मा चैतन्यनामा आत्मा विग्रहः मुरारिः संसृतिकुत्सा-विनाशी गजपतिरुत्कलाधीशः । निरवद्यस्त्यक्तराजसः । निर्वृतिमान् अवाप्त प्रेमानन्दः । तृतीये मुरारिः स्वपुर्वैद्यः । चैतन्यात्मा शचीपुत्रैकनिष्ठः गजपति गौराङ्गप्राणः करिराजः । निरवद्य स्त्यक्तद्वैतः । निर्वृतिमान् सत्सेवानन्दितः । अत्राद्यपक्षो वाच्यः । अन्त्यौ तु व्यङ्ग्यौ ॥ २

**यदस्मिन् वेदसिद्धान्ताः प्रकाशन्ते सतां प्रियाः ।**
**तेनायं भण्यते ग्रन्थो नाम्ना सिद्धान्तदर्पणः ॥ ३**

प्रकृतं ग्रन्थं स्तौति-यदिति । वेदसिद्धान्ता वेदस्य नित्यत्व-भगवद्रूपत्वेतिहास-पुराणरूपत्वरूपाः प्रकाशन्ते सम्यक् प्रतीता भवन्तीत्यर्थः । सतां वैदिकानां हरिभक्तानां ॥ ३

**एकमेव परं तत्त्वं वाच्यवाचकभावभाक् ।**
**वाच्यः सर्व्वेश्वरो देवो वाचकः प्रणवो भवेत् ॥ ४**

ग्रन्थमवतारयति एकमिति —'एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कार' इति षट्प्रश्न्यां वाच्यवाचकयो रीश्वरोङ्कारयो रभेदो दर्शितः । एवमन्यत्र च ॥ ४

**मत्स्यकूर्म्मादिभी रूपै र्यथा वाच्यो वहु र्भवेत् ।**
**वाचकोऽपि तथर्गादिभावाद् वहु रुदीर्य्यते ॥ ५**

द्वयो र्वहुरूपतामाह —मत्स्येति । वाच्य सर्व्वेशो यथा मत्स्यादि रूपै र्वहुमूर्त्ति स्तथा वाचकोऽपि प्रणव ऋग्यजुःसामाथर्वेतिहासपुराणादि रूपै र्वहुरूपो भवति । "एकोऽपि सन् वहुधा योऽवभातीति" श्रीगोपाल-

तापन्यां । एकानेकस्वरूपायेति श्रीवैष्णवे च वाच्यस्य बहुरूपत्वं । "सर्व्वे वेदाः प्रणवादिका" इत्यारभ्य 'तस्य ह वै प्रणवस्य या पूर्व्वा मात्रा पृथिव्यकार' इत्यादिनाऽकारोकारमकारार्द्धमात्रा स्तस्य वाचकस्य क्रमाद् ऋग् यजुः सामाथर्व्वाणि भवन्तोति श्रीनृसिंहतापन्यामभिधानात् प्रणव-स्वर्गादिरूपत्वं । 'एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानीति' बृहदारण्यकात् । 'इतिहास पुराणस्य वक्तारं सम्यगेव हि । माञ्चैव प्रतिजग्राह भगवानीश्वरः प्रभुः । एक आसीद् यजुर्व्वेद स्तं चतुर्धा व्यकल्पयत । चातुर्होत्रमभूत्तस्मि स्तेन यज्ञ-मकल्पयत् । आध्वर्य्यवं यजुर्भिस्तु ऋग्भि र्हौत्रं तथैव च । औद्गात्रं सामभिश्चैव ब्रह्मत्वे चाप्यथर्व्वभिः । आख्यानैश्चाप्युपाख्यानै र्गाथाभि र्द्विजसत्तमाः । पुराणं संहिता श्चक्रे पुराणार्थ-विशारदः । यच्छिष्टन्तु यजुर्व्वेद इति शास्त्रार्थनिर्णयः ।' इति वायुपुराणे सूतोक्ते श्चेतिहास-पुराणयो र्व्वेदत्वं ॥ ५

**आद्यन्तरहितत्वेन द्वयं नित्यं प्रकीर्त्त्यते ।**
**आविर्भाव-तिरोभावौ स्यातामस्य युगे युगे ॥ ६**

अथोभयो र्नित्यत्वमाह—आद्यन्तेति । आदि र्जन्म अन्तो विनाशः । तद्रहितत्वेन वाच्यवाचकरूपं वस्तुद्वयं नित्यमुच्यते । तमादि-मध्यान्तविहीनमेकमि'ति कैवल्योपनिषदि । 'ज्ञाज्ञौ द्वावजावीशानीशा-विति' श्वेताश्वतरोपनिषदि । 'तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।' इति कठवल्ल्यां । 'अविकाराय शुद्धाय नित्याय परमात्मने । सदैकरूप-रूपाय विष्णवे सर्व्वजिष्णवे । अपक्षय-विनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदास्तीति केवलमिति' श्रीवैष्णवे च वाच्यस्य सर्व्वेशस्य नित्यत्वं प्रकीर्त्त्यते । वाचा विरूपनित्ययेति श्रुत्या । अनादि-निधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः

सर्व्वाः प्रवृत्तयः ॥' इति स्मृत्या च वाचकस्य वेदस्य नित्यत्वं प्रकीर्त्यते इत्यर्थः । ननु 'ब्रह्मविष्णुरुद्रेन्द्रा एते सर्व्वे प्रसूयन्त' इति सर्व्वेशस्य विष्णो रुत्पत्तिः श्रुता । देहविनाशश्च स्मर्य्यते भारतादिषु । वेदस्यापि शब्दराशित्वादुत्पत्ति-विनाशौ दुर्व्वारौ, ततः कथं तयो र्नित्यत्वं तत्राह—आविर्भावेति । अस्योभयात्मकस्य वस्तुनो जन्मनाशौ न स्तः । किन्त्वाविर्भावतिरोभावौ भवेतां । ब्रह्मेत्यादि श्रुतौ विष्णोरुत्पत्ति स्तेषु तस्य सङ्गतिरेव, चौरेष्विव राज्ञः । उत्पत्ति-प्रतिषेधादेव । देहनाशोऽपि प्रातीतिक एवेन्द्रजालिकस्येव वोध्यः । नित्यस्य नाशासम्भवात् । वेदस्यापि नित्यत्वात्तौ नेति प्रतिपादयिष्यते ॥ ६

## जगतः स-प्रतीकत्वात् कार्य्यत्वं सर्व्वसम्मतं ॥ ७

एवमास्तिकान् प्रति श्रुत्यादि-प्रमाणेनेश्वर-वेदौ नित्यौ दर्शितौ । अथ वेदावमन्तृन्नास्तिकान् प्रत्यनुमान- प्रमाणेन तौ तथा दर्श्यते । तत्र जगत्-कर्त्तृतयेश्वरोनुमेयः । तदर्थं जगतः कार्य्यत्वं तावदाह—जगत इति । सप्रतीकत्वात् सावयवत्वात् । 'अङ्गं प्रतीकोऽवयव' इत्यमरः । तदयं प्रयोगः—इद जगत् कार्य्यं, सावयवत्वात्, घटवत् ; यन्न सावयवं न तत् कार्य्यं परमाणुवद् वियद्वद्वेति सर्व्वेषां बौद्धादीनां तार्किकाणाञ्चाभिमतं । एतेन न कदाचिदनीदृशं जगदिति तन्नित्यत्ववादिनां कर्म्मजड़ानां मतमपास्तं । ते ह्येवमनुमिन्वन्ति —इद जगत् न कार्य्यं मनसाप्यविभाव्यमानरचनत्वात् । न खलु भूधर-सागरादिकं दिगाकाशादिकञ्च केनचित् सुमेधसा शक्यं मनसापि रचयितुम् । अतोऽनादिसिद्धं नित्यमेतत् । यः कल्पः स कल्पपूर्व्वं इति युक्तेरनादित्वमस्य । ईदृशमपि जगत् सत्यसंकल्पेनेश्वरेण सुकरमिति तत्परिहारो व्यक्तीभावि ॥ ७

## संघातः परमाणूनां नास्तिकैर्यः प्रकल्प्यते ।
## स तु स्थिरस्य संहन्तुरस्वीकारान्न सिद्ध्यति ॥ ८

जगद्रूपे कार्य्ये मतान्तराणि निराकरोति—संघात इति । पार्थि-

वादय श्चतुर्विधाः परमाणवः पृथिव्यादिभावेन युगपत् संघातं भजन्ते इति भावक्षणिकत्ववादिनो वौद्धाः। पृथिव्यादि-संघातहेतवः परमाणवो न चतुर्विधाः, किन्त्वेकस्वभावा एव, परिणामात्तु पृथिव्यादिरूपो विशेष इत्याहंता स्याद्वादिनः प्राहुः। तैः कल्पितोऽयं संघातो न सम्भवति। स्थिरस्य संहन्तु श्चेतनस्य तैरस्वीकृतत्वादिति सूत्रभाष्येऽस्य विस्तरः ॥८

## प्रधानस्य न कर्त्तृत्व जड़त्वादेव साम्प्रतम् ॥ ६ ॥

विभुपुरुषच्छायया सचेतनं प्रधान जगत्कर्त्तृ स्यादिति सांख्या मन्यन्ते, तान्निरस्यति—प्रधानस्येति। तदयं प्रयोगः—प्रधानं न जगत्कर्त्तृ, जड़त्वात्, काष्ठादिवत्। ज्ञानेच्छाप्रयत्नवतः कुलालादे र्घटादि-कर्त्तृत्वं लोके दृष्टं काष्ठादितुल्ये प्रधाने ज्ञानाद्यभावान्न तस्य जगत्कर्त्तृत्वं। पुरुषच्छायया लब्धचैतन्यं तच्चेत् तत्कर्त्तृ स्वीक्रियते, तर्हि पुरुषस्यैव तत्त्वं। न खलु तप्तायसो दग्धृत्वमयोनिमित्तमपितु वह्निनिमित्तमेवेति ॥६

## ईदृशस्य न कर्त्ता स्याज्जीवः शक्तेरदर्शनात् ॥ १०

अदृष्टद्वारा जीवो जगत्कर्त्तेति केचिदाहु स्तान्निरस्यति—ईदृशस्येति। अनेकै र्महीधरैः सागरै श्चात्यद्भुतै रुपेतस्य चतुर्द्दशभुवनात्मकस्यानन्तकर्त्तृ-भोक्तृयुक्तस्यासंख्येयभोग्यभोगस्थानरम्यस्यातर्क्यरचनस्य जगत इत्यर्थः। तदय प्रयोगः—जीवोऽस्मदादि र्न जगत्कर्त्ता, तादृश-तन्निर्माणे तस्य शक्त्य-भावात्। व्यतिरेके ईश्वरवत्। नचादृष्टं तस्य शक्तिः। ईदृशस्या-दृष्टस्यानुपार्जनात्। न च सर्वादृष्टं तत्र द्वार। सर्व्वैः सम्भूय तादृग-दृष्टमुपार्जितमित्यर्थे श्रुत्यादि-प्रमाणाभावादिति तुच्छमेतत् ॥ १०

## अतो ज्ञानादिभि र्धर्म्मै र्विशिष्ट स्त्रिभिरीश्वरः।
## एतस्य जगतः कर्त्ता स नित्यः सदकारणः * ॥ ११

तर्हि कोऽस्य जगतः करोति चेत्तत्राह—अत इति। परमाणुषु

---

* स तु कारणम्।

संघातकर्त्तृतायाः प्रधाने परिणामकर्त्तृताया असम्भवाज्जीवे जगन्निर्माण-शक्तेरदर्शनाच्चेत्यर्थः । ईश्वर एव जगत्कर्त्ता भवद्भि रनुमातव्यो गले निपतित इति भावः । तदयं प्रयोगः—इदं जगत् सकर्त्तृकं, सावयवत्वात्, घटादिवत् ; यन्नैवं तन्नैव । यथा परमाणु र्यथा चाकाशमिति । तत्कर्त्ता चेश्वर एव । तस्यैव सर्व्वज्ञस्य सत्येच्छस्य द्व्यणुक-महीधरसागरादि-जगन्निर्माणे शक्तत्वात् । नन्वनेनानुमानेन तत्कर्त्ता सिद्धो नतु तत्कर्त्तृत्वनिर्व्वाहकं ज्ञानेच्छादीति चेत्तदपि नैव धर्म्मिग्राहकेण सिद्ध्यतीत्याह—ज्ञानादिभि स्त्रिभि र्विशिष्ट इति । तेनानुमानेन जगत्-कर्त्तृतया सिद्ध्यन् धर्मीश्वरः स्वकर्त्तृत्व-निर्वाहकं ज्ञानेच्छाप्रयत्नलक्षणं धर्म्मत्रयमादायैव सिध्यति, लोके तद्वतः कर्त्तृत्वदर्शनादित्यर्थः । नन्वस्तीश्वरो जगत्कर्त्ता किन्त्वनित्यः सः । जगत्कर्त्तृत्वाच्चतुर्मुखवदिति चेत्तत्राह—स इति । हेतुगर्भं विशेषणं । तदयं प्रयोगः—ईश्वरो नित्यः सत्वे सत्यकारणकत्वात् । यन्नैवं तन्नैवं यथा घट-प्रागभावो यथा च घटः । घटप्रागभावस्याकारणकत्वेऽप्यसत्वात् । घटस्य सत्वाऽपि सत्कारण-कत्वात्, न नित्यत्व मधिकन्तु स एव मूलमित्यत्र ( १।१६ ) वक्ष्यते । एतेनेश्वरः क्षणिकः सत्त्वात् । यत् सत् तत् क्षणिकं ; यथा मेघ इत्यनुमानं-निरस्तम् । न च सत्वादिति सद्धेतुः, व्याप्यत्वासिद्धत्वात् । तत्त्वञ्च व्याप्तिग्राहक-प्रमाणाभावात् । न च सत्वस्य हेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणं निश्चितं, सतः शैलादेः क्षणिकत्वादर्शनात् ; एवमेतद् वेदेपि निरस्तं वेदितव्यं ॥ ११

## निर्दोषेश्वर-वाक्यत्वाद्वेदः प्रामाण्यमश्नुते ॥ १२

एवं ज्ञानादिगुणकमीश्वरं नित्यमापाद्य तद्वाक्यत्वाद् वेदस्य प्रामाण्यं ग्राहयति—निर्दोषे इति । भ्रमः प्रमादो विप्रलिप्सा करणापाटवञ्चेति वक्तृदोषा भवन्ति । तद्रहितेनेश्वरेण वक्त्रा प्रयुक्ते वेदवाक्ये दोषवत्पुरुषाप्रणीतत्वेन प्रामाण्यस्य सहचारात् । तेनैव हेतुना तस्मिन्

प्रामाण्यं सिद्धं । दोषवत्पुरुष प्रणीतन्तु वाक्यमप्रमाणं, यथा कापिलादितन्त्रं । अयमर्थः—'छन्दांसि जज्ञिरे तस्मादित्यादि' श्रुतेरीश्वर-जन्यत्वेन यद्यपि वेदस्यानित्यत्वमसन्देहं, तथापि निर्दोषसर्वज्ञकृतत्वात् तस्य प्रामाण्यमबाधं, यथार्थज्ञान-करणत्वात् । कपिलादेस्तु जीवत्वेन भ्रमादिदोष सम्भवात तद्वाक्यमप्रमाणमिति । नन्वृषभस्य बुद्धस्य चेश्वर-त्वात्तद् वाक्यं प्रमाणं स्यात् ; मैवं । तस्य तस्य चानुमितेश्वरतया ऽनङ्गीकारात् । ईश्वरः खलु नित्यः सर्व्वज्ञादि-नित्यगुणकोऽनुमितः, स्याद्वादे क्षणिक-विज्ञानवादे च कूटस्थो भावो नास्तीति न तयो स्तादृगी-श्वरत्वम्, अतस्तद् वाक्यमप्रामाणं । किञ्च, न खल्वर्हत्-सिद्धान्त ऋषभेनोपदिष्टो न चार्हतापि स दृष्टः । किन्तु मायामयीं तच्चेष्टां लोकेभ्यः श्रुत्वा दुरदृष्टभाक् स तां दधार, जनान् दुरदृष्टान् धर्माद् भ्रंश-यामास । स चेश्वरः कर्मानुसारिफलमर्पयन्न विषम इति भाष्यपीठके ( १;६६ ) निरूपितं * । बुद्धश्चासुरान् यज्ञाद् भ्रंशयितुमहिंसाव्यप-देशेन तथोपदिदेश, नतु तस्मिन्नुपदेशे तस्य तात्पर्य्यगन्धोऽपीति तत्त्व-विदः । तथा च तद्व्यामोहफलकासत्वावरण-पूर्व्वकत्वात्तदुपदेशस्य न प्रामाण्यमिति ॥ १२ ॥

**धर्म्मिग्राहकमानेन ज्ञानेच्छाकृतयो यथा ।**
**भवेयुरीश्वरे सिद्धा स्तथा देहेन्द्रियासवः ॥ १३**

एवं नास्तिकान् प्रति नित्यो नित्यज्ञानादिगुणक ईश्वरो जगत्क-र्त्तृतया साधितः । वेदस्य च सर्व्वज्ञेश्वर-प्रणीतत्वात् प्रामाण्यं साधितं तार्किकमुखेन । तत्रेश्वरस्य सविग्रहत्वं वेदस्य नित्यत्वं च न सिद्धं ।

---

* प्राणिकर्म्मानुरूपफलप्रदो भगवान् नायं देहो देहभाजामि-त्यादिदिशोक्त्युपदिष्टनिष्ठान् शिष्यान् प्रति परतः मूर्त्तित्वेनावगतः प्रयच्छति तेभ्य स्तदभीष्टानि । इत्यादि

तदिदं द्वयं शास्त्रैकदेशि-मतेन साधयितुमाह—धर्मीति । यथा लोके ज्ञानेच्छाकृतिमतः कर्त्तृत्वदर्शनात् कर्त्तृतयानुमिते ईश्वरे कर्त्तृत्व-निर्वाहकं ज्ञानादि धर्म्मिग्राहकेण तेनैवानुमानेन साध्यते । तथा लोके देहादिमतः कर्त्तृत्व-दर्शनात् कर्त्तृत्वनिर्वाहि देहादिकमपि साधनीयमित्यर्थः। कर्त्तृत्वस्य देहादिव्याप्यत्वात् । ननु कुलालादीनां चेष्टां विना कृतिमात्रेण * घटादिकरणेऽसामर्थ्याच्चेष्टाश्रयदेहादि भवति सहकारि । ईश्वरस्य तु कृतिमात्रेण सर्वकरणे सामर्थ्यान्नदेहादेरपेक्षेति चेत् नैवमेतत्। कर्त्तृत्व-निर्वाहे ज्ञानादिमत्तस्येव देहादिमत्त्वस्याप्यन्वयव्यतिरेकाभ्यां सिद्धः। यत्र कुलालादिषु कर्त्तृत्वं, तत्र देहादिसत्वं दृष्टं। यत्र मुक्तात्मसु देहादिमत्त्वाभाव स्तत्र न कर्त्तृत्वमिति। न च सावयवत्वेन देहस्याप्यनित्यत्वं । तस्याकर्म्मजन्यत्वेनानित्यत्वाभावात् । इतरथा ज्ञानस्याप्यनित्यत्वनियमेन तज ज्ञानस्यानित्यत्वं स्यात्। ननु चेष्टां * विनापि प्रयत्नमात्रेणैव कार्य्यकरणे सामर्थ्यान्नेश्वरस्य चेष्टाश्रय-देहादि स्वीकार्य्यमिति चेन्न, विनापीच्छाप्रयत्नौ ज्ञानमात्रेणैव तस्मिन् सामर्थ्यान्न तत्रेच्छादिकमपि स्वीकार्य्यमित्यपि सुवचत्वात् । ननु देहस्यापरिच्छिन्नत्व नियमेन युगपन्निखिलदेशगत—कार्य्यानुपपत्तिरिति चेन्नैतत् चतुरस्रं । नित्यस्य तद्देहस्याचिन्त्यशक्त्या सर्वत्र युगपत् सान्निध्यात् । जातिवत्; यथा गोत्वादिजातिः प्रतिव्यक्ति पर्य्याप्तापि सर्वासु व्यक्तिष्वेका, तथा प्रतिकार्य्यपर्य्याप्तोऽपि तद्देहः सर्वत्रैक एवेति न किञ्चिच्छिन्नं। यत्तु महत्त्वादुद्भूतरूपत्वाच्च तद्देहस्य प्रत्यक्षतापत्तिरित्युच्यते ; तच्चापातरम्यं देवादिदेहवदन्तर्धान-शक्तियोगेन तस्याप्यप्रत्यक्षत्वात् । एतेन कार्य्यस्य देहादिमत् कर्त्तृपूर्व्वकत्वनियमोऽङ्कुरादिषु देहादिमतः कर्त्तुरनुपलम्भान्निरस्त इति प्रत्युक्तं। यत्तु जीवादृष्ट-सम्पादित देहादिकमीश्वरो भूता-

---

* आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः ।
कृतिजन्या भवेच्चेष्टा तज्जन्यैव क्रिया भवेत् ॥ ( वैः विः ४।१।१ )

वेशन्यायेनाविश्य कृतकार्य्या स्तदावेशं त्यजति। ननु तस्मिन् स्वाभाविकं देहाद्यस्ति ज्ञानादित्रयातिरिक्तविशेषधर्माभावादित्याहु स्तदिदं कुबुद्धि-विजृम्भितमेव। ईदृश-कल्पनायां प्रमाणाभावाच्चित्यदेहत्वे प्रमाण-सत्वाच्च। तस्मादीश्वरे ज्ञानादिवद्देहादिकमपि धर्मिग्राहकेणैव प्रमाणेन सिद्ध॥१३

**यथा ज्ञानादिकं नित्यमीश्वरस्य प्रकीर्त्यते।**
**तस्य निःश्वसित वेद स्तथा नित्यः प्रकीर्त्यतां॥१४**

ननु प्रकृते किमागतं तत्राह—यथेति। यथेश्वरे कर्त्तृता-निर्वाहकं ज्ञानादित्रयं धर्मिग्राहकमानेन तार्किकेण स्वीकृतं, नास्तिकान् प्रति युक्तिकशया तत् स्वीकारित, तथास्माभि स्तार्किकान् प्रति तथैकतन्निर्वाहकं देहादि स्वीकारितं। यथेश्वरस्य ज्ञानादिकमैश्वरत्वान्नित्यं, तथा तन्निःश्वसितरूपो वेदोऽप्यीश्वरत्वादेव नित्य इत्यनिच्छद्भिरपि तैः स्वीकार्य्यं। एतेन 'छन्दांसि जज्ञिरे तस्मादिति' जन्यत्व-श्रवणात् वेदस्याप्यनित्यत्वं यन्मन्यन्ते, तन्निरस्तं। जनेः प्रादुर्भावार्थकत्वेन विवक्षित-व्याघातात्। यच्च 'त्रयो वेदस्य कर्त्तारो मुनिभण्ड-निशाचराः।' * इति सौगतै र्वेदस्य मुन्यादिरचितत्वमुक्तं, तदपि प्रत्युक्तं। ते हि पाप—वासनाभ्युदिता द्विद्वेषात् तथा कल्पयन्ति। यत्तु निःश्वसितस्य वायूरूपत्वात्तस्याक्षर राशिरूपत्वमसम्भवतीत्याहु स्तदपीषद् धिषणं। अ वचिन्त्यत्वेन तत्स-म्भवात्। नह्यस्मत्प्राणवत्तत्प्राणो वायूरूपः, किन्त्वैश्वरत्वात्तद्विलक्षण एवेति किमनुपपन्नं। अपि च जलादेः कथञ्चिद्वन्यादिरूपत्वं स्याद्वादे विज्ञानस्य घटाद्यर्थाकारत्वं विज्ञानवादे बहुत्व—सङ्ख्यायाः कार्य्यस्थौल्या-रम्भकत्व मारम्भवादे ब्रुवन्त स्ते त्रय स्तन्निःश्वसितस्यातर्क्यैस्याक्षर-राशिरूपत्वं वक्तुं कथं त्रपन्ते॥ १४

---

* त्रयो वेदस्यकर्त्तारो भण्डधूर्त्तनिशाचराः। इति सर्व्वदर्शन-संग्रहे चार्व्वाकदर्शनम्।

**वेदस्यापौरुषेयत्वमेवं केचित् प्रचक्षते ।**
**'वेदस्याध्ययनं सर्व्वं गुर्व्वध्ययन-पूर्व्वकम् ।**
**वेदाध्ययन-सामान्यादधुनाध्ययनं यथा' ॥ १५ ॥ ***

अथ वैदिकैकदेशिमतेन वेदस्यापौरुषेयत्वं तावदाह—ननु वेदः पौरुषेयः, शास्त्रत्वात् स्मृतिशास्त्रवत्, काठकादि-संज्ञातश्चेति चेत्तत्राह—वेदस्येति । केचिदिति अस्मदुक्तलक्षणं वेदमस्वीकुर्वन्तः कर्मलग्ना इत्यर्थः । अपौरुषेयत्वे तेषामनुमानं दर्शयति—वेदस्येति । वेदाध्ययनं सामान्यं पक्षं कृत्वा गुर्वध्ययन-पूर्वकत्वे साधिते परिशिष्टमपौरुषेयत्वं सिद्ध्यत्येवेति भावः ॥ १५ ॥ †

**तृतीयक्षणविध्वंसो यः शब्दस्योच्यते परैः ।**
**स तु भ्रमः स्यान्नित्यस्य तिरोभावस्तु युज्यते ॥ १६**

वेदानित्यत्ववादिन स्तार्किकां स्तन्मुखेन निराकरोति । ननु वेदो नित्यो न, शब्दराशित्वात । शब्दस्य चोत्पन्नः खो विनष्टः क इति बुद्धे रनित्यत्वमसन्देहमिति चेत्तत्राह— तृतीयेति । शब्दस्य तृतीयक्षण-ध्वंस प्रतियोगित्वं यत्तद्बुद्ध्युदयात्तार्किकैरुच्यते, स खलु भ्रम एव । तथा ब्रुवन्त स्ते भ्रान्ता इत्यर्थः । वस्तुतस्तु नित्यस्य तस्य तिरोभाव एव युक्त इत्याह—नित्यस्येति । तदस्य प्रयोगः—शब्दो नित्यः, नित्याकाश-गुणत्वादाकाशनिष्ठमहापरिमाणवत् । व्यतिरेके घटादिनिष्ठह्रस्वत्वादिवत् ।

---

* श्लोकवार्त्तिकस्य वचनमिदम् ।

† मीमांसान्यायप्रकाशटीकायां—अत्र सर्वशब्देन निखिल-शाखासम्बन्धि वेदाध्ययन गृह्यते, नतु निखिलकालवृत्ति, अतश्च अतीत-कालवृत्ति निखिलशाखाध्ययनस्य पक्षत्वं बोध्यं । एव गुर्वध्ययन-पूर्वकत्वं साध्यं, वेदाध्ययनत्वं हेतुः, आधुनिकाध्ययनस्य दृष्टान्ततेति विवेकः ॥

अनित्यत्वे शब्दगुणमाकाशमिति लक्षणासिद्धिः। वायु-प्रेरणाप्रेरणाभ्यां शब्दस्य व्यक्त्यव्यक्तौ स्यातां, न तु स्वरूप-विनाशात्मा ध्वंसः। न हि घटे गृहान्तर्निहिते तस्य ध्वंसः शक्यते वक्तुं। व्यक्त्यव्यक्ती आविर्भाव तिरोभावौ। एवञ्च शब्दमात्रस्य नित्यत्वं सिद्धमित्याकाशे नित्यत्वा-श्रयणो तार्किकमतेनानुमानमेतत्। तदनित्यत्ववादे त्वापेक्षिकं तदमृता देवा इतिवत ॥ १६ ॥

**ईश्वरा विभु-विज्ञान-सुखात्मा श्रुतिभि र्मतः।**
**विज्ञानघनशब्दाद मूर्त्तः स तु तथाविधः ॥ १७**

एवं तार्किकयुक्त्या नास्तिकान् प्रतीश्वरवेदौ जगत्कर्त्तृ प्रमाण-भूतौ निरूप्य सात्वतैकदेशियुक्त्या च तार्किकान् प्रति तौ सविग्रहनित्या प्रदर्श्य तेषु चार्जवं गतेषु तयो र्याथात्म्य श्रुति-नयेन स्वयं वक्तुं प्रवर्त्तते—ईश्वर इत्यादिभिः। विभुविज्ञानानन्दरूपा य आत्मा स एवेश्वरो, न तु विद्योपाधिः सत्वतनुः। विज्ञानमानन्द ब्रह्म महान्तं विभुमात्मान मित्यादि श्रुतिभ्यः। स च तथाभूतो मूर्त्त एवेत्याह—विज्ञानेति। विज्ञानघनानन्दघनेत्यादि श्रुतेरेवेत्यर्थः। 'मूर्त्तौ घन' इति भगवान् पाणिनिः। काठिन्येऽर्थे हन्ते रप् घनश्चादेश इति सूत्रार्थः। अन्यथा श्रुति र्व्याकुप्येत। तस्य मूर्त्तत्वं त्वचिन्त्यशक्तिसिद्धं। 'अचिन्त्यशक्तिः पुरुषः पुराण' इत्यादि श्रुतेः ॥ १७ ॥

**विशेषाद्देहिभावेन गुणित्वेन च स प्रभुः।**
**सत्तास्तीत्यादिवद्भाति विदुषामपि सर्व्वदा ॥ १८**

स निर्भिन्न एवेश्वरो विशेषवलाद्देहदेहिभावेन गुणगुणिभावेन च विदुषामपि भासते। सत्ता सती कालः सर्व्वदास्तीत्यादौ सत्तादेः सत्ता-द्याश्रयत्ववत्। न च सत्ता सतीत्यादि-वुद्धि र्भ्रमः। सन् घट इत्यादि-वदवाधात्। न चारोपः। सिंहो देवदत्तो नेतिवत् सत्ता सती नेति

कदाप्यव्यवहारात् । न च सत्ताद्दैः सत्तान्तराभावेऽपि स्वभावादेव सतीत्यादि-व्यवहारः । तस्यैवेह सच्छब्देनोक्तेः । तस्माभिन्नेऽपि वस्तुनि भेदव्यवहारो विशेषादेव । विशेषश्च भेद-प्रतिनिधि, न भेदः । स चार्थापत्ति * सिद्धोऽवश्यमभ्युपेयः ; तं विना विशेषण-विशेष्य-भावादिकं न सम्भवेत् । स च वस्त्वभिन्नः । स्वनिर्वाहकश्चेति नानवस्था । तस्य तादृशत्वञ्च धर्म्मिग्राहकप्रमाण-सिद्धं जगत्कर्त्तृत्व सार्वज्ञ्यादीत्यधिकन्तु भाष्यपीठक-( १।१४-२२ ) स्यमन्तकेषु ( २।२३ ) विलोकनीयम् ॥ १८ ॥

## स मूलं किल सर्व्वस्य न मूलं तस्य विद्यते ॥ १९ ॥

ननु जगन्मूलतया कीर्त्यमानस्यापि विरिञ्चादे र्नारायणमूलकत्व-कीर्त्तनान्नारायणस्यापि किञ्चिन्मूलं भावीति चेत्तत्राह—स मूलमिति। स परेशो नारायणः सर्वस्य कार्य्यस्य मूलं । 'मूलं विष्णु र्हि देवाना-मि'त्यादि वचनेभ्यः । न हि तस्य मूलमस्ति, मूले मूलादर्शनात् । एवमेवाह कपिलो मूलप्रकृतिं निरूपयन्—मूले मूलाभावादमूलं मूल-मिति । सर्वेषां वादिनां खलु मूलकारणं किञ्चिदभ्युपेयं, अन्यथानवस्था-पत्ति र्दुर्व्वारा । विरिञ्चादे र्मूलत्वन्तु भ्रान्तानुवादरूपमतो न तेषां तत्त्वं । यत्त्वया मूलं वक्तव्यं तदस्माकं नारायण इति ॥ १९ ॥

## अचिन्त्यशक्ति-सम्बन्धाद् वेदरूपो विभात्यसौ ॥ २० ॥

एवं धर्म्मिणमीश्वरं नित्यमापाद्य वेदं नित्यमापादयति—अचि-न्त्येति । असौ चतुर्भुजदेवाकारो नारायणो यथाऽचिन्त्यशक्त्या तद्वि-लक्षणो हंसादि स्तथा निःश्वसितांशेनाविष्कृताक्षरराशि रनादितो विभा-तीति नित्यत्वं वेदस्य सिद्धं । एवमेवोक्तं श्रुतौ—एतद्वै सत्यकामेत्या-दिना ; तथैव षष्ठे-'वेदो नारायणः साक्षात् स्वयम्भुरिति शुश्रुम' इति ॥

* अनुपपद्यमानार्थदर्शनेनोपपादकार्थान्तरकल्पनमर्थापत्तिः ॥

**यदसौ वाचकोऽभ्येति क्रमेणैकेन सर्वदा ।**
**आविर्भावमतस्तस्य बुधा नित्यत्वमूचिरे ॥ २१**

नारायण-रूपत्वान्नित्यत्वं वेदस्य शब्दादापादितं । अथानुमानेनापि तदाह—यदिति । असौ वाचको वेदो येन क्रमेण यथास्वरवर्णघटितयानुपूर्व्या पूर्वकल्पे ईश्वरादाविर्भूत, तेनैव क्रमेण परकल्पेऽप्याविर्भवत्यतस्तस्य नित्यत्वं बुधाः स्वायम्भुवादय ऊचिरे । तदयं प्रयोगः—वेदो नित्यः, एकानुपूर्विकतया प्रतिकल्पमाविर्भावात् । यथैकस्वभावतया पुनः पुनराविर्भवन् मत्स्यकूर्मादि रीश्वरावतारः । यन्नैवं, तन्नैवं, यथा मुहुर्मुहुरुत्पद्यमानोऽस्मदादिजीवदेह इति ॥ २१ ॥

**स्यान्नित्याकृति-वाचित्वात् कर्त्रभावाच्च नित्यता ।**
**काठकादि-समाख्या तु तदुच्चारण-हेतुका ॥ २२ ॥**

अनुमानान्तरमाह—स्यादिति । वेदो नित्य इन्द्राद्यर्थाकृति-वाचित्वात् । गोत्वादिवाचिगवादि-शब्दवत् । यन्नैवं तन्नैवं, यथा यज्ञदत्तादिशब्दः । यथा गोत्वादिजातयो नित्या स्तथेन्द्राद्यर्थाकृतयश्च । विश्वकर्म-निर्मितशास्त्रे एता आकृतयः प्रसिद्धाः । चित्रकर्मप्रसिद्धये इन्द्रं वज्रहस्तं वरुणं पाशहस्तं यमं दण्डहस्त लिखन्ति । इन्द्रादि-व्यक्त्युत्पत्तेः पूर्वं स्थितायाः स्मृत्वा विरिञ्चि स्तत्तद्व्यक्तीः सृष्टवान्, अतो नित्या स्ताः । अपरमनुमानमाह—वेदो नित्यः, कर्तृशून्यत्वात् कालवत् ; यन्नैवं तन्नैवं, यथाधुनिककाव्यादिः । शब्दानित्यत्वपक्षे नियतानुपूर्व्यभावाद् यज्ञदत्तादि-शब्दानामाधुनिककाव्यादीनाञ्चानित्यत्वं बोध्यं । ननु नित्यश्चेद् वेदः कर्तृशून्यत्वात्तर्हि काठकादिसंज्ञा तस्य कथं ? कठेन प्रोक्तं काठकमित्यादि तद्व्युत्पत्तेरिति चेत्तत्राह—काठकादीति । कठेन प्रोक्तमुच्चारितं, न तु रचितं, नित्यत्व-श्रवणव्याकोपादिति कठादीनां यदुच्चारणं तद्धेतुकेत्यर्थः । एतदुक्तं भवति—महाप्रलयावसाने

सर्वेश्वरेणाकृतिविदा सृष्टोऽध्यापितवेदश्च ब्रह्मा वैदिकैः कठादिशब्दैस्तु तत्तदाकृती विचिन्त्य तत्तद्व्यक्तीः स्वतत्तच्छक्तियुक्ता निर्माय तदुपाधीन् जीवान् तत्तद्ग्रन्थ-प्रवर्त्तने विनियुङ्क्ते । तेऽपि तत्तद्दत्तज्ञानशक्तयः पूर्व-पूर्वकठादिप्रवर्त्तितां स्तान् स्वरतो वर्णतश्चास्खलितानधीत्य प्रवर्तयन्तीति नित्यत्वं वेदस्य सिद्धं । एवमाह श्रुतिः—'यो ब्रह्माणं विदधाति पूर्वं यो हि वेदांश्च प्रहिणोति तस्मै' इति । स्मृतिश्च—यथर्त्तावृतुलिङ्गानि नाना-रूपाणि पर्य्यये । दृश्यन्ते तानि तान्येव तथाभावा युगादिषु । युगान्ते-ऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवेत्याद्या । एवं पुराणेषु मार्कण्डेयादि संज्ञाश्च बोध्याः ॥ २२ ॥

**जीव-वाक्येषु लभ्यन्ते जीवधर्म्मा भ्रमादयः ।**
**वेदे तु नैव ते सन्ति सर्व्वज्ञवचनोच्चये ॥ २३ ॥**

वेदस्य निर्दोषत्वं वक्तुमाह—जीवेति । भ्रमः प्रमादो विप्रलिप्सा करणापाटवञ्चेति चत्वारो जीवेषु दोषाः । तत्रातस्मिं स्तद्बुद्धि र्भ्रमः । अनवधानता प्रमादः । स्वप्रतीतविपरीत-प्रत्यायनं विप्रलिप्सा । इन्द्रिय-मान्द्यं करणापाटवं । जीवाः खलु शुक्तिकादिषु रजतादीनि प्रतियन्ति । स्वान्तिके जायमानं गानमन्यत्र निहितमनसो न शृण्वन्ति । ज्ञानखलाः स्वावगतानप्यर्थान् शिष्येषु न प्रकाशयन्ति । निहितमनसोऽपि करण-मान्द्याद् यथावद् वस्तूनि न गृह्णन्तीति प्रसिद्धं । तत्र ते दोषा स्तद्वाक्येषु संक्रमन्ते । अतः कपिलादि सिद्धान्तानां परस्परं व्याहति र्दृष्टा । न त्वेते दोषा वेदे सन्ति । तस्य भगवद्रूपत्वेन सर्वज्ञत्वात् ॥ २३ ॥

**साधनं यत्फलञ्च ह यथायं यद् विशारदः ।**
**तथैव सर्व्वं निपुणं र्यथोक्तं तत् प्रलभ्यते ॥ २४ ॥**

निर्दोषत्वे हेतुमाह—साधनमिति । अयं विशारदः सर्वज्ञो वेदः । यत् साधनं कारीर्य्यादि यथाह—तस्य फलञ्च वृष्ट्यादि यदाह तत्तथैव

सर्वै र्निपुणै र्यथोक्तं प्रलभ्यतेऽनुभूयते । कारीर्य्या वृष्टिः पुत्रेष्ट्या पुत्रः । ज्योतिष्टोमेन स्वर्गः, ज्ञानेन मोक्षश्चोच्यते वेदेन, तत्सर्वं यथावद् दृष्टमतो भ्रमादिदोषशून्यो वेदः ॥ २४ ॥

**अतो ब्रह्मादिभि र्देवै र्वशिष्ठाद्यै र्महर्षिभिः ।**
**मन्वाद्यैश्चापि वेदोऽयं सर्वार्थेषूपजीव्यते ॥ २२ ॥**

निपुणाः सर्वे ते के इत्यपेक्षायामाह--अत इति । यस्मान्निरो र्निर्दोषो वेदः । अतो ब्रह्मादिभि र्महत्तमैः सर्वैः सर्वेषु धर्मार्थकाम-मोक्षेषु फलेषु निमित्तोष्वेषु वेद उपजीव्यते आश्रीयते, तदुक्तान्यनुष्ठाय तत्फलान्यवाप्यन्त इत्यर्थः ॥ २५ ॥

**ब्रह्माद्यैरर्चितोऽप्येष यदि कैश्चिन्नराधमैः ।**
**घूकैरिव रवि र्नाभिवीक्ष्यते तस्य का क्षतिः ॥ २६ ॥**

ननु यदीदृशो वेद स्तर्ह्यर्हदादयः कथं तमवमन्यन्ते, तत्राह--ब्रह्माद्यै रिति । तै र्महत्तमै रिदानीन्तनैश्च महद्भिः सर्वै रर्चितः समाश्रितोऽप्येष वेदो यदि सौगतादिभिः कैश्चिन्मनुष्यापसदैरुलूकै र्भानुरिव नाभि-वीक्ष्यते नाङ्गीक्रियत इत्यर्थः । तर्हि अस्य वेदस्य काऽपूज्यता-लक्षणा क्षतिः स्यान्न काऽपोति । यथा देवमानवादिभिः सर्वैः सत्क्रियमाणः सूर्य्य स्तरुकोटरेषु निह्नुवानै र्घूकै र्न वीक्ष्यते, नैतावता तस्य प्रभाव-हानि स्तद्वत् । तथा च पामराणां का कथेति ॥ २६ ॥

**अर्हत्प्रभृतयः शास्त्रे स्वकीये यत्फलं जगुः ।**
**तन्नैव लभ्यते क्वापि तत स्तत् कल्पितं भवेत् ॥ २६ ॥**

इति सिद्धान्त-दर्पणे नास्तिक-निरासः प्रथमा प्रभा ॥१॥

अर्हदादिशास्त्रस्य कल्पितत्वात् तदुक्तसाधनात् साध्यं नास्तीत्याह --अर्हदिति । ते ह्येवं कल्पयन्ति । आत्मधर्माधर्मपुद्गल-काला-

काशाः षट् पदार्थाः स्तेषां स्यादस्तीत्यादि रूपेण सप्तभङ्गिना न्यायेनास्थैर्य-भावनं ? घात्यघाति शब्द-वाच्येन पापपुन्यरूपेण कर्माष्टकेन वेष्टितस्य जीवस्य सम्यग् दर्शन-ज्ञानचारित्रैः साधनै रावृतै स्तदष्टकात् पञ्जरात् कीरस्येव विनिर्गतस्य तस्यालोकाकाशवर्त्तिन्यामतिविस्तीर्णायां शिलाया-मारोहो मुक्तिरिति । न चैतत् केनापि कुत्रापि प्रतीतं मालतीमाधवादि-नाटकार्थवत् प्रकल्पनया निबद्धत्वात् । न चैतन्मतस्थानां किञ्चित् मोक्षचिह्नं । प्रत्यक्षनारकित्वेनावगतत्वात् । एवं बौद्धानाञ्च भावक्षणिक-वादिनां न काप्यास्थेति—का कथा तेषामिति नास्तिका निराकृताः ॥२७

इति प्रथमा प्रभा व्याख्याता ॥ १ ॥

---

# द्वितीया प्रभा ।

**इतिहास-पुराणाख्यो भागो यो वाचकस्य सः । ***
**कर्त्तृ वर्जित एवास्य व्यासः प्राकट्यकृन्मतः ॥ १**

अथेतिहास-पुराणेषु विष्णुभक्तिवाक्यानि वीक्ष्यातिखिन्नां स्तान्य-वेदरूपाणि विवक्षून् मीमांसकैकदेशिनः कांश्चिन्नास्तिकाभासान्निराकर्त्तुं प्रवर्तते—तथाहि-'नन्वितिहास पुराणयो र्न वेदत्वं' । 'अष्टादश पुरा-णानि कृत्वा सत्यवतीसुतः । चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितमिति' स्कान्दे । मात्स्ये च तयो र्व्यास-कृतत्वाभिधानादिति चेत्तत्राह—इति-हासेति । 'कृत्वा सत्यवतीसूत अक्रे' इत्यत्र तानि प्रकटय्य तत प्रकटया-म्बभूवेत्येवार्थः । अन्यथा श्रुतिमुख्यार्थव्याकोपापत्तिः । किञ्च—यद् ब्राह्मणानीतिहासपुराणानीति ब्रह्मयज्ञे वेदाध्ययने विनियोगाच्च तयो र्वेदत्वं, पुरणात् पुराणमिति वेद-पूरकत्वान्निरुक्तिः । न हि न्यूनस्य

* इतिहासादिरप्येवमनादि र्वेदवद् भवेत् ।

स्वर्णकङ्कणस्य त्रपुणा पूर्त्ति र्युज्यते । एवमभिप्रेत्योक्तं स्कान्दे—'यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजः । पुराणं नैव जानाति न तु स स्याद् विचक्षण' इति ॥ १ ॥

**मार्कण्डेयादि-संज्ञा तु काठकादिवदिष्यतां ॥ २ ॥**

ननु वेद श्चेत्तद्भाग स्तर्ह्यनादौ तस्मिन्मार्कण्डेयादि-संज्ञा कथं, तत्राह—मार्कण्डेयादीति । मार्कण्डेयेनोच्चारितं मार्कण्डेयमित्यवमादि विधया तद्व्युत्पत्तिः काठकादिवन्मन्तव्या ॥ २ ॥

**वेदेऽपि येतिहासादौ शूद्रस्याप्यधिकारिता ।**
**निदेशाद् रथकारादेरिव ज्ञेया क्वचित्तु सा ॥ ३ ॥**

इतीतिहासादिपौरुषेयत्ववाद-निरासो द्वितीया प्रभा ॥२॥

एवञ्चेद् तद् भागे शूद्राधिकारः कथं तत्राह—वेदेऽपीति । "वर्षासु रथकारो ऽग्निना दधीतेति" विधिरूपवेदनिदेशादेवाधान-मार्गे-ऽपेक्षितत्वादभूणां त्वादेवानां व्रतपते व्रतेनादधामीत्याधानाङ्गभूत-मन्त्र-मार्गे च रथकारस्य सुधन्वापरनाम्नः सङ्करजातेरद्विजस्याधिकारोऽन्यथा विधिव्याकोपापत्तेः । नतूत्तरकर्मणि तदुपयुक्ते अध्ययने वा, तथा तन्नि-देशादेव तद्भागे वेदेऽपि तस्याधिकारो, न तु तदन्यस्मिन्नृगादाविति । आदि-पदा"न्निषादस्थपतिं याजयेदिति" [ मैत्रायनीयसंहिता २।२।४ ] ग्राह्यं । अत्र निषादाभिन्नस्य स्थपते र्यागमार्गे तदङ्गमन्त्रमार्गे चाधिकारो, न तु तदतिरिक्ते पाठे, तदुक्ते कर्मणि वेति ॥ ३ ॥

इति द्वितीया प्रभा व्याख्याता ॥ २ ॥

---

## तृतीया प्रभा ।

**नन्वृगादिः पुराणान्तो वेदो नित्योऽस्तु किन्त्वदः ।**
**सम्प्रति प्रचरद् भूमौ श्रीमद्भागवताभिधं ।**
**अष्टादशातिरिक्तत्वाद् वेदरूपं न सम्भवेत् ॥ १ ॥**

एवमवेदत्वशङ्कापङ्के दुर्धीभिरर्पिते प्रक्षालिते केचिद्वेदं स्वीकुर्वन्तोऽपि शैवादयो विष्णुपारतम्यैकनिरूपके श्रीभागवते विद्वेषिणः शङ्कन्ते। नन्विति—ऋगादेः पुराणान्तस्य वेदस्योक्तैः हेतुभि र्नित्यत्वं यत्त्वयोक्तं तन्मया स्वीकृतं, किन्तु शुकपरीक्षित्-सम्वादितया भुवि सम्प्रति यत्प्रचरति, तदिदं भागवतं वेदरूपं न भवेत् । यदिदमष्टादशभ्यो ऽतिरिक्तं प्रतीयते ॥

**अष्टादशान्तरं * व्यासो भारतं कृतवान् प्रभुः ।**
**भारतोत्तरमेतत्तु चक्रे भागवतं मुनिः ॥**
**इत्येवमुक्ते रेतस्य नाष्टादशसु सम्भवः ॥ २ ॥**

एतदुपपादयति—अष्टादशेति सार्द्धकेन । अष्टादशपुराणानि कृत्वेत्यादिना मात्स्य-स्कान्दयो र्वाक्येनाष्टादशपुराण-प्राकट्यानन्तर भारत-प्राकट्यमुक्तं । प्रथमस्कन्धेतु श्रीव्यास-नारदसम्वादे भारतं प्रकटय्याप्यपरितुष्टेन व्यासेन श्रीनारदोपदेशात् स्वपरितोषकर श्रीभागवतं शुक-परीक्षित्-संवादि प्रकटयाम्बभूवेत्युक्तं । कथा तु तत्रैव द्रष्टव्या । तेन ज्ञायते श्रीमद्भागवतमेतदष्टादशसु नान्तर्भवति, किन्तु विष्णुधर्मादिवदति-रिक्तमेवातो न वेदरूपत्वं । अष्टादशान्तर्भूतं भागवतं स्वितोऽन्यदेव स्यात्, तत्तु अस्तु वेदरूपमिति भावः ॥ २ ॥

**नैवं लक्षण-संख्याभ्यामिदमेव हि तद्भवेत् । ३॥**

---

* अष्टादशोत्तरं ।

परिहरति—नैवमिति । अष्टादशान्तर्गतस्य श्रीभागवतस्य यल्ल-क्षणं या च संख्या मात्स्यादौ कथ्यते, ताभ्यामेतच्छुकभाषितमेव तदन्तर्गतं, नान्यदित्यर्थः । तत्र मात्स्ये—'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म-विस्तरः । वृत्रासुर-वधोपेतं तद्भागवतमिष्यते ॥ सारस्वतस्य कल्पस्य मध्ये ये स्यु र्नरामराः । तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥ अष्टादश सहस्राणि पुराणं तत्प्रकीर्त्तितं । लिखित्वा तच्च यो दद्याद्धेम-सिंह-समन्वितम् । प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदमिति' । स्कान्दे च— 'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्ध-सम्मितः । हयग्रीव-ब्रह्मविद्या यत्र वृत्रवध स्तथा । गायत्र्या च समारम्भ स्तद् वै भागवतं विदुरिति ।' शुकभाषितत्वञ्चास्योक्तं पाद्मे—'अम्बरीष ! शुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनैव यदीच्छसि भवक्षयमिति' गौतमेन । वाराहे च––परीक्षितः शापकथन-प्रसङ्गे तत्त्वमुक्तं । तत्रा-जग्मु र्महाभागा मुनयः संशितव्रताः । शुकश्च व्यासतनयो महाभागवतो मुनिः । संहितां श्रावयामास राज्ञो भागवतीं मुनि' रित्यादिकं श्रीवराह-देवेन । ब्रह्माण्डे च––शुकवागमृताब्धीन्दुरिति श्रीशेषदेवेन । लक्षणेन ह्यसाधारणधर्म्मवचनेन वस्तु परिचीयते, न तु व्युत्पत्तिमात्रेण ; यथा सास्नादिमत्त्वेन लक्षणेन गोः परिचीयते । अन्यथा भगवत् प्रोक्तं भग-वद्देवताकं वा यत्किञ्चिच्छास्त्रं भागवतं स्यात् । गच्छतीति व्युत्पत्त्या महिषोष्ट्रादिश्च गोर्भवेत् । तस्माल्लक्षणेनैव वस्तु परिचेयं । यत्तु मात्स्याद्युक्तलक्षणं वीक्ष्य केनचित् सुधिया कृतमेतद् व्यासकृतं त्वन्यदिति पामराणां शङ्कान्तरं, तत् खलूपरि परिहरिष्यामः ॥ ३ ॥

**ब्रह्मश्रीपतिसंवादो योंशोऽष्टादश-मध्यगः ।**
**व्यास-नारद-सम्वाद स्तत्र यस्मात्प्रवेशितः ॥**
**एकस्यैव तदेतस्य श्रीमद्भागवतस्य तत् ।**

**अष्टादशान्तर्वर्त्तित्वं पौर्वापर्य्यञ्च सम्भवेत् ॥ ४ ॥**

नन्वष्टादशपुराणोत्तरं भारतं प्रकटितं । भारतोत्तरन्तु श्रीनारदोपदेशाद् भागवतमित्येतद् ब्रुवता त्वया भागवतद्वयमभिमतं । तेन च पुराणान्यूनविंशति रुक्तानि । किञ्च--भारतोत्तरस्य तस्य लक्षणसंख्ये मात्स्याद्युक्ते प्रतीते, भारतात् पूर्वस्य के ते इति स्ववक्तृत्वं प्रज्ञान्धप्रेष्ठं प्रकाशितमिति चेत्तत्राह--ब्रह्मश्रीति द्वाभ्यां । 'इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे । स्थिताय भवभीताय कारुण्यात् संप्रकाशितं ।' इति द्वादशस्कन्धवाक्यादवगतो ब्रह्मनारायणसम्वादरूपो यो भागवतस्य भागो भारतात् पूर्वमष्टादशस्वाविर्भावित स्तत्रानाविर्भूतो व्यासनारदसम्वादरूप स्तस्यैवापरोभाग स्तत्र यस्मात् प्रवेशितः । तत्ततो हेतोरेकस्यैव तस्य तदुभयं सम्भवेत् । भागद्वयविशिष्टस्य सत स्तस्य लक्षण-संख्ये मात्स्यादावुक्ते इति न कोपि सन्देहगन्धोऽस्ति । एवमेवोक्तं प्रथमे ( ७।८ ) सूतेन--'स संहितां भागवतीं कृत्वानुक्रम्य चात्मजं । शुकमध्यापयाम स निवृत्तिनिरतं मुनिमिति' । प्रथमतः स्वयं ब्रह्मश्रीश-सम्वादरूपं सङ्क्षेपेण कृत्वा पश्चान्नारदोपदेशादनुक्रम्य विस्तार्य्य चेत्यर्थः । तथाच त्वदुक्तस्सर्व्वं वियत्पुष्पायमाणमभूदतो मूर्द्धानं गृहीत्वा स्वदिहीति । भारतोपक्रमेऽप्येवमस्ति---प्रथमं चतुर्विंशति-सहस्रं भारतं कृतमाख्यानै विना । ततस्तैः सहितं पञ्चाशत् सहस्ररूपं तदनन्तरं ततोऽप्यधिकं ततोऽप्यधिकमिति ॥

**विवक्षा नास्ति कालस्य स चेदत्र विवक्ष्यते ।**
**मार्कण्डेयाग्नेययोः स्याद् वहिर्भाव स्तदानयोः ॥ ५ ॥**

इति श्रीमद्भागवतस्याष्टादशातिरिक्तत्ववाद-निरास स्तृतीया प्रभा ॥ ३ ॥

अन्यासङ्गतिमाह-- विवक्षेति । पौर्वापर्य्येण भासमानस्य कालस्य विवक्षा नास्ति । स तादृशः कालश्चेदत्रेतिहासपुराण-निरूपण

वस्तुमिष्यते, तर्ह्यनयोः सम्प्रति भुवि प्रचरतो र्मार्कण्डेयाग्नेययो रष्टादशभ्यो वहिर्भावः स्यात् । अयमर्थः---भारतात् पूर्वेष्वष्टादशसु यद्भागवतं ततोऽन्यदिदं शुकभाषितं यद्भारतादुत्तरमिति चेत्तव शङ्का, तर्हि मार्कण्डेयादावपि एवं साभ्युदिति । तथाहि मार्कण्डेयारम्भे-- (१म अ० ) 'भगवन् ! भारताख्यानं व्यासेनोक्तं महात्मना । पूर्णमस्त्यमलैः शब्दैर्नानाशास्त्रसमुच्चयै रित्यादि ।' तदिदं भारताख्यानं बह्वर्थं बहुविस्तरं । तत्त्वतो ज्ञातुकामोऽहं भगवं स्त्वामुपागतः' ॥ इति च प्रोच्य जैमिनिना कृतै श्चतुर्भिः प्रश्नैः पुराणकथावतारिता । सा च भारतोत्तरभावित्वं विना न सङ्गतेति मार्कण्डेयस्याष्टादशभ्यो वहिर्भावः । एवमाग्नेयारम्भे 'सूत ! त्वं पूजितोऽस्माभिः सारात्सारं वदस्व न' (१।३) इति शौनकेन पृष्टः सूतः । 'सारात्सारतरं हि भगवान् विष्णुरव्यय ईश्वर' * इत्यादिकमुक्त्वाऽवतार्यं च पुराणं तत्तद्विद्यासारं ब्रुवन् प्रसङ्गाद् ग्रन्थान्त गीतासारं प्रवक्ष्यामीति प्रतिज्ञाय 'दैवी ह्येषा गुणमयीत्यादीनि' कानिचित् पदान्यवाच्यत् । अर्थमात्रोक्तौ यथावत्तानि न ब्रूयादित्याग्नेयस्यापि तेभ्यः सः । तस्मात कालविवक्षात्र नास्तीति भागवतादीनां त्रयाणामष्टादशान्तर्भावः सिद्धः । इत्थञ्चेतिहासपुराणानि सर्वाण्यनादिसिद्धान्येव, व्यासादीषां प्राकट्यमात्रमित्युक्तं न विस्मर्त्तव्यं ॥ ५ ॥

इति तृतीया प्रभा व्याख्याता ॥ ३ ॥

---

# चतुर्थी प्रभा ।

प्रणम्य च शिवां देवीं शर्व्वं भागवतं तथा ।
पुराणं संप्रवक्ष्यामि यथोक्तमृषिभिः पुरा ॥

---

* सारात्सारो हि भगवान् विष्णुः सर्गादिकृद् विभुः ।

इति वाक्यात्तु ये देवीपुराणं द्वेषसङ्कुलाः ।
ऊचु र्भागवतं ते हि स्वमौढ्यं प्रवितन्वते ॥ १ ॥

एवं शुकपरीक्षित्सम्वादरूपं श्रीभागवतमष्टादशान्तर्गत महापुराणमित्यापाद्य तत्र शाक्तैककृतानि शङ्कान्तराणि निराकर्त्तुं प्रवर्त्तते । तथाहि ननु प्रणम्य चेत्यादिके देवीपुराणस्य प्रथमे पद्ये तत्र भागवत-पदप्रयोगाद् भगवत्या इदं भागवतमिति योगाच्च देवीपुराणमेव भागवतमस्तु यल्लक्षणादिकं मात्स्ये प्रोक्तं — न चेदं भुवि शुकप्रोक्तत्वेन प्रचरदिति चेत्तत्राह — प्रणम्य चेत्यादि प्रकटार्थं ॥ १ ॥

मात्स्यादौ यद् भागवतं प्रोक्तं तच्छुक-भाषितं ।
न तद्देवीपुराणं स्याल्लक्षणादि-विपर्य्ययात् ॥ २ ॥

तेषां मौढ्यं प्रपञ्चयति—मात्स्यादाविति । मात्स्ये स्कान्दे च यस्य लक्षणं गायत्रीसमारब्धत्वं कथितं, यस्य सङ्ख्या चाष्टादश–सहस्री वर्णिता, तद्धि पाद्मादौ शुकभाषितत्वेनोक्तं ग्राह्यं, न तु देवीपुराणं । तत्र मात्स्याद्युक्तयो र्लक्षण-संख्ययोरभावात् । तद्विपरीतयो स्तयोः सत्त्वाच्च । तस्य हि विजयत्रैलोक्याभ्युदयशुम्भनिशुम्भ-मथनाख्यपाद–त्रयविशिष्टत्वं लक्षणं । लक्षञ्च तस्य सङ्ख्योक्ता । 'लक्षमात्रेण श्लोकस्य विद्या देवेन भाषिते'त्यभ्युदय–पादपूर्त्त्यध्यायस्थवाक्यात् । शुक–परीक्षित्सम्वादस्तु तत्र क्वापि नास्ति । किञ्चाध्यायसमाप्तौ निवन्धेषु तदुदाहृतौ च देवीपुराणनाम्नैव समाप्तिरुदाहृतिश्च दृश्यते, न तु भागवत–नाम्नेत्यतो देवीपुराणं भागवतं ब्रुवन्तः शुकभाषिततद्विद्वेषिणो विमूढा एव विदिताः । एतेन 'हेमसिंह समन्वितमिति' सिंहवाहिनीत्वेन लिङ्गेन देवीपुराणत्व-शङ्कनं त्राणजीवनञ्च निरस्तं । न खलु तत्र तत्तद्वाहनो–पेतानि पुराणानि देयान्युच्यन्ते । किन्तु जलधेन्वाद्युपेतान्येव । तस्मात् सिंह-शब्देन सिंहासनं वाच्यं । पुस्तकाधारत्वेन तस्यापेक्षयत्वाद् भीमो

भीमसेन इति वदेकदेशेनापि पूर्णनामाभ्युपगमाच्च । यस्य चतुर्षु पादेषु हेम्नां सिंहाः सन्तीत्येके ॥ २ ॥

**तत्र भागवतत्वेन शर्व्वस्यैव विशेषणात् ।**
**तथेति व्यवधानाच्च पुराणं न विशिष्यते ॥ ३ ॥**

प्रणम्य चेत्यादिवाक्याद्देवीपुराणे भागवतत्व-भ्रान्तिं निरस्य तस्य वाक्यस्य वास्तवार्थं दर्शयति । तत्र पद्ये भागवत-शब्दस्य शर्व-विशेषणत्वात् तथा-शब्देन व्यवधानाच्च पुराणं श्रीभागवतमिति न विशेषणीयमिति । शर्वस्य * भागवतत्वन्तु—'भस्मोद्धूलितदेहस्तु जटा-मण्डल-मण्डितः । अहं ध्यायामि तं विष्णुं परमात्मानमव्ययं । विष्णोराराधनार्थं मे व्रतचर्या पितामहेति' गारुड़े द्वितीयाध्याये (१०।११) तद्वाक्यात् । न च भगवत्या इदं भागवतमिति वाच्यं, स्त्रीभ्यो ढगिति ढकाणो वाधात् । तथात्वे तद्विषयकस्य सर्वस्य तत्त्वापत्तेः । तस्माद् भागवत्प्रोक्तत्वभागवद्देवताकत्वैकतररूपावयवशक्त्या समुदायशक्त्या च शुकभाषितशास्त्रं वाच्यं वोधयन्नयं भागवत-शब्दः पङ्कजादि-शब्दवद् योगरूढ़ो वोध्यः ॥ ३ ॥

**यदिद कालिकाख्यञ्च मूलं भागवतं स्मृतं ।**
**इत्युक्तेः कालिकाभिख्य यद् भागवतमूचिरे ।**
**तच्च प्रमादाद् द्वेषाच्चेति प्राहु विपश्चितः ॥ ४ ॥**

ननु यदिदमित्यादिकात् पुराणदान-प्रसङ्गे कालीपुराणवाक्यात् कालीपुराणं भागवतमस्तु यदष्टादशसु गण्यते, नत्वेतत् सम्प्रति भागवतत्वेन भुवि प्रचरदिति केचित् कालीभक्ताः कल्पयन्ति—तान्निरस्याह—यदिदमिति सार्धेन । प्रमादादिति—मात्स्ये यद्भागवतं लक्षणसङ्ख्याभ्यां

---

* शृणाति सकलाः प्रजाः संहरतीति शर्व्वः । विष्णु-सहस्र-नामभाष्ये शङ्करः ।

वर्णितं न तत्कालीपुराणं । तल्लक्षणसंख्ययो स्तत्राभावात् । पाद्मादौ श्रीभागवतस्य शुकभाषितत्वञ्च लक्षणं तत्कालिकापुराणे नास्त्येव, ततः प्रमादात् श्रीभागवते विद्वेषात्तथा वदन्तीति विमूढास्ते इत्यर्थः ॥ ४ ॥

**एतस्योपपुराणत्वान्मात्स्योक्तत्वं त्रिमूढता ।**
**त्रयोदशत्वाद्यसिद्धे लैङ्गादीनां सुमूढता ॥ ५ ॥**

इति देव्यादिपुराणभागवतत्ववाद-निरासश्चतुर्थी प्रभा ॥ ४ ॥

किञ्च, मात्स्ये लक्षण-सङ्ख्याभ्यां पुराणानि लक्षयित्वा तेषां दानमाहात्म्यानि चोक्तानि । अस्य कालीपुराणस्योपपुराणमध्ये गणित-त्वान्मात्स्योक्तं श्रीभागवतमिदमेवेति ब्रुवन्तो विमूढा भवन्ति । अपिच तत्रैव कालीपुराणे उपपुराणान्यष्टादशोक्तानि । शैवं यद्वायुना प्रोक्तं वैरिञ्चं वैष्णवं तथा । यदिदं कालिकाख्यञ्च मूलं भागवत स्मृतं । सौरञ्च नारदीयञ्च मार्कण्डेयञ्च वह्निजं । भविष्यं ब्रह्मवैवर्त्तं लैङ्गञ्चैव त्रयोदशं । वामनं कौर्मं मात्स्यञ्च सप्तदशञ्च गारुडं । स्कान्दमष्टादश प्रोक्तं पुराणञ्च न संशय इति । यदिच कालिकाख्यं पुराणं भागवतमिति सम्बध्यते, तर्हि लैङ्गादीनां त्रयोदशत्वाद्यनुपपत्तिरिति । तथा ब्रुवन्त एते सुमूढा इत्यर्थः । तस्माद् भागवताख्यमुपपुराणमिदमन्यदेव । यत् सौर-पुराणे—'ततो भागवतं प्रोक्तं भागद्वयसमन्वितमिति' कृत लक्षणं (९।८) । ददाति सूर्य्यभक्ताय यस्तु भागवतं द्विजाः । सर्वपाप-विनिर्मुक्तः सर्व-रोगविवर्जितः । जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदमिति (९।२०।२१) यस्य दानफलं प्रोक्तं । कौर्मे च प्रथमाध्याये उपपुराणसङ्ख्यैवमस्ति । 'आद्यं सनत्कुमारोक्तं नारसिंहं ततः परं । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितं । चतुर्थं शिवधर्माख्यं साक्षान्नन्दीश-भाषितं । दुर्वाससोक्तमाश्चर्य्यं नारदीयमतःपरं । कापिलं मानवञ्चैव तथैवोशन-सेरितं । ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च । माहेश्वरं तथा

साम्बं सौरं सर्वार्थसञ्चयं ॥ पराशरोक्तमपरं मारीचं भार्गवाह्वयमिति ।
तस्मादेतानि शैवादीनि पुष्करपुराणशिवरहस्य-विष्णुधर्मोत्तरादिवदुप-
पुराणान्येव । तेषूक्तं भागवतमन्यदेव यद् व्युदासाय श्रीधरस्वामिभिः
शङ्कितं भागवतं नामान्यदिति नाशङ्कनीयमिति (१।१।१) ॥ ४ ॥

इति चतुर्थी प्रभा व्याख्याता ॥ ४ ॥

---

# पञ्चमी प्रभा ।

**शङ्कापङ्कविलिप्तत्वादप्रामाण्यं यदीष्यते ।**
**वेदादौ चिरशङ्काऽस्ति तस्यापि च तदिष्यतां ॥ १ ॥**

ननु श्रीधरस्वामिभिः शङ्कितत्वादिदं सम्प्रचरद् भागवतमप्रमाणं,
न हि वीजमन्तरा शङ्कोद्भवति इति चेत्तत्राह—शङ्केति । तत्परिहारो
वेदादाविति ; सौगतै र्वेदस्य मुनिभण्डादि-कृतत्वमाशङ्क्यते । सांख्यैश्च
मृदब्रवीदापोऽब्रुवन्नित्यादि दर्शनादनाप्तत्वं तस्य शङ्कितं । जैमिनिना
काठकादिसंज्ञादर्शनात्तस्य पौरुषेयत्वं शङ्कितं । आचारमाधवेऽपि स्मृती-
नामप्रामाण्यं शङ्कितं । तथा वेदवाच्येशस्य कालस्य च सांख्यैरभावः
समर्थ्यते । निर्गुणः परमात्मेति केवलाद्वैतिभि रुपपाद्यते । सांख्यैरेव
वेदवाच्यस्य ज्योतिष्टोमादे र्हिंसादोषेणाननुष्ठेयत्वमुच्यते । न चैतावता
वेदादीनामप्रामाण्यादिकं स्यात्, तदप्रामाण्यादेः परिहृतत्वात् । शङ्कितं
वस्तु प्रक्षालितशङ्कं सत् स्थूणानिखात-न्यायेन दार्ढ्यमासीदिति न
शङ्कामात्रेणाप्रामाण्यं । अबाधिता खलु शङ्का प्रामाण्यपनयति ।
न तु बाधितापीति । ननु मार्कण्डेयादौ शङ्काविरहात् तत्प्रमाणमेव ।
अत्र संप्रचरति श्रीभागवते शङ्कासत्त्वादप्रामाण्यमुच्यते इति चेन्नैवं
भ्रमितव्यं । मार्कण्डेयादौ तत्तत्कथा-प्रधानतया तस्मिन् दुर्धियां बलवद्

